# श्रीसरस्वत्यष्टोत्तरशतनामस्तोत्रम्

सरस्वती महाभद्रा महामाया वरप्रदा ।
श्रीप्रदा पद्मनिलया पद्माक्षी पद्मवक्त्रका ॥ १॥

शिवानुजा पुस्तकभृत् ज्ञानमुद्रा रमा परा ।
कामरूपा महाविद्या महापातकनाशिनी ॥ २॥

महाश्रया मालिनी च महाभोगा महाभुजा ।
महाभागा महोत्साहा दिव्याङ्गा सुरवन्दिता ॥ ३॥

महाकाली महापाशा महाकारा महाङ्कुशा ।
पीता च विमला विश्वा विद्युन्माला च वैष्णवी ॥ ४॥

चन्द्रिका चन्द्रवदना चन्द्रलेखाविभूषिता ।
सावित्री सुरसा देवी दिव्यालङ्कारभूषिता ॥ ५॥

वाग्देवी वसुधा तीव्रा महाभद्रा महाबला ।
भोगदा भारती भामा गोविन्दा गोमती शिवा ॥ ६॥

जटिला विन्ध्यवासा च विन्ध्याचलविराजिता ।
चण्डिका वैष्णवी ब्राह्मी ब्रह्मज्ञानैकसाधना ॥ ७॥

सौदामिनी सुधामूर्तिस्सुभद्रा सुरपूजिता ।
सुवासिनी सुनासा च विनिद्रा पद्मलोचना ॥ ८॥

विद्यारूपा विशालाक्षी ब्रह्मजाया महाफला ।
त्रयीमूर्तिः त्रिकालज्ञा त्रिगुणा शास्त्ररूपिणी ॥ ९॥

शुम्भासुरप्रमथिनी शुभदा च स्वरात्मिका ।
रक्तबीजनिहंत्री च चामुण्डा चाम्बिका तथा ॥ १०॥

मुण्डकायप्रहरणा धूम्रलोचनमर्दना ।
सर्वदेवस्तुता सौम्या सुरासुरनमस्कृता ॥ ११॥

कालरात्री कलाधारा रूपसौभाग्यदायिनी ।
वाग्देवी च वरारोहा वाराही वारिजासना ॥ १२॥

चित्राम्बरा चित्रगन्धा चित्रमाल्यविभूषिता ।

कान्ता कामप्रदा वन्द्या विद्याधरसुपूजिता ॥ १३॥ विद्याधरी सुपूजिता

श्वेतानना नीलभुजा चतुर्वर्गफलप्रदा ।
चतुराननसाम्राज्या रक्तमध्या निरञ्जना ॥ १४॥

हंसासना नीलजङ्घा ब्रह्मविष्णुशिवात्मिका ।
एवं सरस्वतीदेव्या नाम्नामष्टोत्तरं शतम् ॥ १५॥

इति श्री सरस्वत्यष्टोत्तरशतनामस्तोत्रम् सम्पूर्णम् ॥